रसायनी स्त्री० रसायनं रसस्थानमस्त्यस्या अच् गौ० ङीष् । गुडुच्याम् काकमाच्यां, महाकरञ्जे, गोरक्षदुग्धायाञ्च ।
रसाल न० रसमाललाति आ+ला-क । सिह्लके, गन्धरसे, शिखरिण्याम्, (मेथभेदे) रसनायां, दूर्व्वायां, विदार्य्यां, द्राक्षायाञ्च स्त्री०। रसां भूमिमालयति आ+ली-ड। आम्र, 'रसालः सालः समदृश्यतासुने'ति नैषधम् इक्षौ, पनसे, गोधूमे, पुण्ड्रेक्षौ च पु० [लिया) क्षुपभेदे ।
रसालिहा स्त्री० रसां भूमिं लेढि स्पृशति लिह्-क । (चाकु-
रसाली स्त्री० रसमालाति आ+ला-क गौरा०ङीष् । (पुंडि आख) इक्षुभेदे । [अण् । पलाशीलतायाम् ।
रसाश्वसा स्त्री० रसां भूमिमाश्वासयति दलैः आ-श्वस-णिच्
रसास्वादिन् पु० रसं पुष्परसमास्वदते आ+स्वद-णिनि । भ्रमरे, मधुरस्त्रृङ्गारादिरसास्वादके त्रि० स्त्रियां ङीष् ।
रसिक पु० रसं वेत्ति अनुभवति ठन् । सारसपक्षिणि, अश्वे, गजे च । रसज्ञे, रसोऽस्त्यस्य ठन् । रसवति च त्रि० ।
रसित न०चु० रस-आस्वादे-क्त । मेघादिशब्दे विड्गादिशब्दे कर्त्तरि क्त । शब्दवति, कर्मणि-क्त । आस्वादिते च त्रि०।
रसुन पु०रस-उनन् । लशुने। ओनन् रसोनः । तत्रैव । स्वार्थे कन् । तत्रार्थे ।
रसेन्द्र पु० रसः द्रवीभूतः इन्द्र इव श्रेष्ठत्वात् । पारदे ।
रसोत्तम पु० रस उत्तमो यस्य । मुद्गे । [हिङ्गुले
रसोद्भव न० रसः पारदम् उद्भवत्यस्मात् उद्+भू-अच्।
रसोपल न०रसः पारदमिव उपलीयते उप+ली-ड शुभ्रत्वात् मौक्तिके ।
रस्य न० रसाच्छुक्रान्नपरिणामादागतः यत् । रुधिरे । रस्यते आस्वाद्यते रस-यत् । आस्वाद्ये त्रि०। रस्याः, 'स्निग्धाः स्थिरा हृद्या' इति गीता पाठायां, रास्नायाञ्च स्त्री०।
रंह गतौ अ०चु०उभ०सक०सेट् । रंहयति-ते अररंहत्-त ।
रंहस् न० रंह-असुन् । वेगे ।
रह गतौ भ्वा०प०सक०सेट् इदित् । रंहति अरंहीत् 'तदन्तर प्रतिपत्तौ रंहति संपरिष्वक्त इति शारीरकसूत्रम् ।
रह त्यागे भ्वा० प०सक०सेट् । रहति अरहीत् ।
रह त्यागे अद०च०उभ०सक०सेट् । रहयति ते अररहत्-त ।
रहस् न० रह-असुन् । निर्ज्जने, गोप्ये, यथार्थे, रमणे च । निर्ज्जने अव्य० ।
रहस्य त्रि०रहसि भवः यत्। गोप्ये,'रहस्यमक्षाः स महदिति नैषधम् । निर्ज्जनभवे च। पाठायां, रास्नायाञ्च स्त्री०टाप्
रहित त्रि० रह-त्यागे कर्म्मणि क्त । वर्ज्जिते ।

रा दाने ग्रहणे च अदा०पर०सक०अनिट् । राति अरासीत् ।
रा स्त्री० रा-सम्प० क्विप् । काञ्चने, रमणे, दाने च ।
राका स्त्री० रा-क । प्रतिपद्युक्तायां पूर्णिमायां सम्पूर्णेन्दु तिथौ, नदीभेदे नवजातरजस्कायां नार्य्याञ्च ।
राक्षस पु० रक्ष एव स्वार्थे अण् 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः पुंस्त्वम् । स्वनामख्याते निकषात्मजे जातिभेदे । जातौ ङीप् । राक्षसजातिस्त्रियाम् स्त्री० । रक्षस इदम् अण् । राक्षसम्बन्धिनि त्रि०स्त्रियां ङीप् ।'राक्षसी रात्रिरुच्यते' त स्मृतिः । दंष्ट्रायां, चण्डिकायां चौरनामगन्धद्रव्ये चस्त्री०ङीप्
राक्षसेन्द्र पु०राक्षस इन्द्र इव श्रेष्ठत्वात् । विश्रवसः ज्येष्ठ सुते निकषात्मजे रावणे । [तस्य इदं । लाक्षायाम् ।
राक्षा स्त्री० लक्ष्यतेऽनया रक्ष-कर्म्मणि-घञ् पृ० वृद्धिः ।
राख शोषणे भूषणे निवारणे च सक०सामर्थ्ये अक०भ्वा०पर० सेट् । राखति अराखीत् । चङि न ह्रस्वः ।
राग पु० रन्ज-भावे घञ् नि० नलोपकुत्वे । रञ्जने, वर्णने, प्रीतौ,अनुरागे, नृपे, चन्द्रे च । करणे घञ् । लोहितवर्णे तद्विशिष्टलाक्षादौ च 'तेन रक्तं रागादि'ति पाणिनिसूत्रम् आधारे घञ् । वसन्तादिनामभिः प्रसिद्धे स्वरविशेषे ।
रागचूर्ण पु०रागस्य रतेश्चूर्ण इव । कामे । रागाय चूर्ण्यतेऽसौ चूर्ण-घञ् । खदिरे, लाक्षायां च । रागयुक्तचूर्णे पु०
रागदालि पु० दल्यतेऽसौ दल-णिच् इन् पृ० वृद्धिः रागेण रक्ततया युक्तो दालिः । मसूरे । [स्त्री० ङीप् ।
रागपुष्प पु० रागयुक्तं रक्तवर्णं पुष्पमस्य । बन्धूके । जवायां
रागप्रसव पु० रागयुक्तो रक्तवर्णः प्रसवोऽस्य । बन्धूके, रक्ता-म्लाने च । [माणिक्ये । रक्तवर्णयुक्ते त्रि०
रागयुज् पु० रागेण रक्तवर्णेन युज्यते युज-कर्म्मणि क्विप् ।
रागसूत्र न० रागयुक्तं सूत्रम् । पट्टसूत्रे ।
रागाङ्गी स्त्री० रागयुक्तमङ्गं यस्याः ङीप् । मञ्जिष्ठायाम् इत०। रागाढ्याप्यत्र स्त्री० ।
रागिणी स्त्री० रागोऽस्त्यस्याः इनि । गीताङ्गे स्वरभेदे । रागवति, अनुरक्ते, कामुके, रतियुक्ते च त्रि०। [ह्रस्वः
राघ शक्तौ भ्वा०आ०सक०सेट् । राघते अराघिष्ट । चङि न
राघव पु० रघोर्गोत्रापत्यम् अण् । रघुवंश्ये, तत्प्रधाने श्रीरामे च । [सागरविशेषलोमजाते वस्त्रभेदे ।
राङ्कव न० रङ्कोरयं, विकारो वा तल्लोमजातत्वात् अण् ।
राज दीप्तौ भ्वा०उभ०अक०सेट् फणादि० । राजति ते अरा-जीत् अराजिष्ट रेजतुः-रराजतुः । चङि न ह्रस्वः ।

**राजक** न०राज्ञां समूहः कन् । नृपसमुदाये । राजैव कन् ।
नृपे पु० । राज-ण्वुल् । दीप्तिमति त्रि० ।
**राजकल्प** पु०ईषदसमाप्तो राजा राजन्+कल्पप् । राजतुल्ये
**राजकदम्ब** पु०कदम्बानां राजा राजद०पर० । कदम्बभेदे ।
**राजकर्कटी** स्त्री० राजते राज-अच् कर्म० । चीनाकर्कट्याम्
**राजकशेरु** पु०कशेरूणाम् राजा राजद० । भद्रमुस्तायाम् ।
**राजकीय** त्रि०राज्ञ इदम् छ कुक् च । राजसम्बन्धिकार्य्यादौ
**राजकुमार** पु० राज्ञः कुमारः । अप्राप्तवयस्के युवराज-
कार्य्यानारूढे राजपुत्रे ।
**राजकुष्माण्ड** पु०राज्ञः कुष्माण्ड इव प्रियत्वात् । वार्त्ताक्याम्
**राजकोषातकी** स्त्री० राजप्रिया कोषातकी । (घियाभिङ्गा)
लताभेदे । [कन् । राजसर्षपे (राइसर्षा) ।
**राजक्षवक** पु० क्षवत्यनेन क्षु-अप् राजते राज-अच् कर्म०
**राजखर्ज्जूरी** स्त्री० राजप्रिया खर्ज्जूरी । खर्ज्जूरीभेदे ।
**राजगिरि** पु० राजाश्रयो गिरिः । मगधस्थे पर्व्वतभेदे ।
**राजघ** त्रि०राजानं हन्ति हन-क नि०। राजहन्तरि, तीक्ष्णे च
'रराज वीरजनया स राजघ'इति नैषधम् ।
**राजजम्बू** स्त्री० राज्ञः जम्बूरिव। पिण्डखर्ज्जूरे राजते
अच् कर्म० । महाजम्बाम् ।
**राजज(य)क्ष्मन्** पु० राज्ञःचन्द्रस्य क्षयकारको ज(य)क्ष्मा ।
रोगभेदे 'राजज(य)क्ष्मेव रोगाणामि'ति माघः ।
**राजतरु** पु० तरूणां राजा राजद० नि० । कर्णिकारवृक्षे
**राजताल** पु०राज्ञस्ताल इव प्रियः 'गुवाकवृक्षे । स्त्रीत्वमपि
ङीप् । 'राजतालीवनध्वनिरि'ति रघुः । [स्निदन्तद्वये ।
**राजदन्त** पु०दन्तानां राजा पर नि०। ऊर्द्ध्वपङ्क्तिस्थे मध्यव-
**राजदेशीय** पु०ईषदसमाप्तो राजा राजन्+देशीयर् । राज-
तुल्ये राजकल्पे । [राजधत्तूरकोप्यत्र पु० ।
**राजधुस्तूरक** पु०धुस्तूराणां राजा राज०पर०कन्। वृहद्धुस्तूरे
**राजधर्म्म** पु०राज्ञो धर्म्मः। राज्ञामवश्यकर्त्तव्ये प्रजापाल-
नादौ कर्म्मणि । [ङीप् । राजावासे महानगर्य्याम् ।
**राजधानी** स्त्री० राजा धीयतेऽस्यां धा-आधारे ल्युट्
**राजधान्य** न० धान्येषु राजा पर० । (श्यामा) श्यामाकधान्ये
**राजन्** पु० राज-कनिन् । नृपे, चन्द्रे, शुचौ, क्षत्रिये, यक्षे,
इन्द्रे, च। पूर्व्वपदस्थः उत्तरपदस्थश्च सन् अभ्याहृतपदार्थ-
श्रेष्ठ वाचकः । यथा राजमाषः मुनिराज इत्यादि ।
**राजनीति** स्त्री० राज्ञां नीतिः । राजकर्त्तव्ये सामाद्युपाये,
तत्प्रतिपादके-शास्त्रे च ।
**राजन्य** पु० राज्ञोऽयम् यत्, राज-अन्य वा । क्षत्रिये राज-
पुत्रे, अग्नौ, क्षीरिकावृक्षे च । [समूहे
**राजन्यक** न० राजन्यानां क्षत्रियाणां समूहः कन् । क्षत्रिय
**राजवत्** त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य
वः । सुन्दरराजवति देशे । [स्त्री० ङीप् ।
**राजपटोल** पु० राजप्रियः पटोलः । पटोले । मधुरपटोल्यां
**राजपट्ट** पु० राज्ञः पट्ट इव । मणिभेदे ।
**राजपथ** पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् ।
'धनूंषि दश विस्तारे श्रीमान् राजपथः स्मृतः । नृवाजि-
रथनागानामसंबाधसुसञ्चर'इत्युक्ते राजमार्गे। [पलाण्डौ
**राजपलाण्डु** पु०पलाण्डूनां राजा श्रेष्ठत्वात् पर०। रक्तवर्ण-
**राजपीलु** पु० राजप्रियः पीलुः । महापीलुवृक्षे ।
**राजपुत्र** पु० राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । बुधग्रहे, नृप-
कुमारे वर्णसङ्करभेदे (रजपुत) 'वैश्यादम्बष्ठकन्यायां राज
पुत्रस्य सम्भव' इति पराशरः ।
**राजपुत्री** स्त्री० राज्ञश्चन्द्रस्य पुत्रीव । कटुतुम्ब्याम् रेणुकायां
नृपरीतौ, मालत्याञ्च । ६त० । नृपकन्यायाम् ।
**राजपुष्प** पु०राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य। नागकेशर
वृक्षे । करुणीवृक्षे स्त्री० ङीप् ।
**राजफणिज्झक** पु० राज-अच् कर्म्म० । नागरङ्गवृक्षे ।
**राजफल** न० राजप्रियं फलम् । पटोले । राजप्रियं
फलमस्याः । जम्ब्वाम् स्त्री० टाप् ।
**राजबदर** न० राज्ञो बदरमिव प्रियत्वात् । रक्तामलके बद-
राणां राजा राजद० प० । उत्तमकोलौ पु० ।
**राजभद्रक** पु० राज्ञो भद्रं यस्मात् कप् । कुष्ठे,(कुड) निम्बे,
पारिभद्रवृक्षे च । [धर्मे राजत्वे ।
**राजभूय** न०राज्ञो भावः राजन्+भू-क्यप् । राज्ञोऽसाधारण
**राजभोग्य** न० राज्ञा भोक्तुं योग्यम् भुज-ण्यत् कुत्वम् ।
जातीकोषे, प्रियालवृक्षे पु० । नृपतेर्भोग्यवस्तुमात्रे त्रि०
**राजमार्ग** पु० राजयोग्यः मार्गः । राजपथे । [व्रीहिभेदे ।
**राजमाष** पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् । (वरवटी)
**राजमुद्ग** पु० मुद्गेषु राजा प० नि० । (मुगानि) मुद्गभेदे ।
**राजरङ्ग** न० राजयोग्यं रङ्गम् । रजते ।
**राजराज** पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० ।
कुवेरे, सार्व्वभौमनृपे, चन्द्रे च । [श्रेष्ठे, यतात्मनि नृपे च
**राजर्षि** पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । राज-
**राजवंश्य** त्रि०राजवंशे भवः यत् । राजवंशोद्भवे। जातिभेदे पु०
**राजवर्त्मन्** न० राजयोग्यं वर्त्म । प्रागुक्तलक्षणे राजपथे ।
६त० राज्ञः कर्त्तव्यकर्म्मणि च ।

राजबला स्त्री॰राज-अच् राजं बलं यस्याः ५ब॰। (गन्धभादाल) लताभेदे ।

राजवल्लभ पु॰६त॰ । प्रियाले, राजवदरे, राजाम्रे, द्रव्यगुण प्रतिपादके तन्नामविद्वत्कृते ग्रन्थभेदे च । राज्ञः प्रिये त्रि॰

राजपत्नी स्त्री॰राजते राज-अच् राजा वल्ली कर्म॰ष्ट॰। (उच्छा) लताभेदे । [राजभावबति देशे ।

राजवत् त्रि॰ राजा राजभावं विद्यतेऽस्य मतुप् मस्य वः ।

राजवीजिन् त्रि॰ राजा वीजी कारणं यस्य । राजवंश्ये ।

राजवृक्ष पु॰ वृक्षाणां राजा पर नि॰ । आरग्वधे (सोन्दाल) राजप्रियौ वृक्षस्तत्फलवीजजातलड्डुकाया राजप्रियत्वात् । प्रियाले ।

राजशण पु॰राज-अच् राजः शणः कर्म॰ । पट्टे (पाट) ।

राजशाक पु॰ शाकानां राजा पर॰ नि॰ । वास्तूकशाके ।

राजशृङ्ग न॰राज्ञां शृङ्गमिव ऊर्द्धस्थितत्वात् । राजचिह्नच्छत्रे

राजस त्रि॰ रजसा निर्म्मितः अण् । रजसोगुणात् जाते कर्मेन्द्रियादौ 'येनास्मिन् कर्म्मणा लोके ख्यातिमाप्नोति पुष्कलाम् । न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजस'मित्युक्ते ख्यात्यै क्रियमाणे कर्मणि च । रजःप्रधानमस्य अण् । रजः-प्रधाने, सर्व्वेषां वस्तूनां त्रिगुणात्मकत्वेऽपि 'भूयस्त्वात्तद्व्यपदेश, इत्युक्तेः क्वचित् तत्प्रधानत्वेन व्यपदेशः ।

राजसभा न॰ स्त्री॰ राज्ञां नृपाणां सभा । नृपसमाजे ।

राजसर्षप पु॰सर्षपाणां राजा श्रेष्ठत्वात्पर॰। (राइसर्षा)सर्षपभेदे । [यज्ञभेदे ।

राजसूय पु॰ राज्ञा सूयते सू-क्यप् । राजमात्रकर्त्तव्ये

राजस्व न॰ राज्ञे देयं स्वं कररूपम् धनम् । राजदेये करे ६त॰ । राजवने ।

राजस्वर्ण पु॰ स्वर्णानां धुस्तूराणां राजा पर॰ । वृहद्धुस्तूरे

राजहंस पु॰हंसानां राजा श्रेष्ठत्वात्पर॰। रक्तवर्णचञ्चुचरणयुक्ते श्वेतवर्णे हंसभेदे,कलहंसे च । राजा हंस इव सारग्रहणात् नृपश्रेष्ठे । [तगरपुष्पे

राजहर्षण न॰ राज्ञः नृपान् हर्षयति हृष-णिच्-ल्यु ।

राजातन पु॰ राजार्थमातनोति फलवीजम् आ+तन-अच् । चीरञ्जीतिख्यातवीजहेतुफलवति प्रियाले ।

राजादन न॰ राज्ञा अद्यते तत्फलवीजजातलड्डुका अद-कर्मणि ल्युट् । प्रियालवृक्षे यस्य फलवीजं (चिरञ्जि) तेन हि लड्डुकां कृत्वा राज्ञा भुज्यते । चीरिकायां (चीरद) किंशुके च । चीरिण्यां स्त्री॰ ङीप् ।

राजाम्र पु॰ आम्राणां राजा श्रेष्ठत्वात् पर नि॰। आम्रभेदे

राजाम्ल पु॰ अम्लानां राजा श्रेष्ठत्वात् पर॰नि॰। अम्लवेतसे

राजार्क पु॰ अर्काणां राजा श्रेष्ठत्वात् पर॰नि॰ । श्वेतार्कवृक्षे। (सादा आकन्द) । [योग्ये त्रि॰। जम्ब्वां स्त्री॰

राजार्ह न॰ राजानमर्हति अर्ह-अण् । अगुरुचन्दने राज-

राजालाबू स्त्री॰राजते राजा अलाबूः कर्म॰। मिष्टालाबाम् ।

राजावर्त्त पु॰ राजानमावर्त्तयति अनुकूलयति आ-वृत-णिच् अण् । उपरत्नभेदे ।

राजि(जी) स्त्री॰ राज-इन् वा ङीप् । श्रेण्याम् पङ्क्तौ, रेखायाञ्च । स्वार्थे कन् । रेखायाम् । राजते राज-ण्वुल् । राजसर्षपे स्त्री॰ ।

राजिकाफल पु॰ राजिकाया इव फलमस्य । श्वेतसर्षपे ।

राजि(जी)फला स्त्री॰ राजिभूतानि श्रेणिभूतानि फलानि यस्याः । चीनाकर्कट्याम् ।

राजिल पु॰ राज-इलच् । डुण्डुभसर्पे (डोड़ासाप)

राजीव न॰राजीं दलराजी अस्त्यस्य व। पद्मे 'राजीवराजीवशलोलेति माघः । हरिणभेदे, मत्स्यभेदे, राजीवसिंहतुण्डांश्चेति मनुः । गजे, सारसपक्षिणि च पु॰ ।

राजेन्द्र पु॰ राजा इन्द्र इव श्रेष्ठत्वात् । 'चतुर्योजनपर्य्यन्तमधिकारी नृपो भवेत् । यो राजा तत्कृतगुणः स एव मण्डलेश्वरः । तस्मादृशगुणो राजा राजेन्द्र'इत्युक्ताधिकारवति भूपतिभेदे ।

राज्ञी स्त्री॰राज्ञः पत्नी ङीप् स्वयं वा राजते राज-कनिन् ङीप् वा । (राणी) राजपत्न्याम् स्वयं राजकर्मकर्त्र्याञ्च ।

राज्य न॰ राज्ञो भावः कर्म वा राजन्+यत् । राज-कर्म्मणि, राजभावे च । [प्रजापालनादौ ।

राज्यधुरा स्त्री॰ ६त॰ अच् समा॰ । राज्यभारे तत्कर्त्तव्ये

राज्याङ्ग न॰६त॰। स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलप्रकृति-रूपेषु अष्टसु राज्यस्योपायेषु ।

राटि पु॰ रट-इण् । (शराल) विहगे, युद्धे स्त्री॰ वा ङीप् । पृ॰ टस्य डत्वम् । राड़िरप्युक्तार्थे ।

राढ़ पु॰ रह-घञ् पृ॰ ढत्वम् । देशभेदे(राड़)स्वार्थे कन् तत्रैव

राढ़ा स्त्री॰ रह-घञ् ढत्वम् । पुरीभेदे गौड़ं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति प्रबोधचन्द्रोदयः ।

राढ़ीय त्रि॰ राढो निवासोऽस्य वृद्धात्छ इति छ । राढदेशोद्भवे

रात्रि(त्री) स्त्री॰ रा-त्रिप् वा ङीप् । रजन्यां खस्वदेशस्य-सूर्य्यमण्डलस्य अदर्शनयोग्ये काले, हरिद्रायाञ्च ।

रात्रिकर पु॰ रात्रिं करोति कृ-अच्, रात्रौ करः किरणोऽस्य वा । चन्द्रे, कर्पूरे च ।

**रात्रि(त्त्र)चर** पु० रात्रौ चरति चर-अच् वा टम् । राक्षसे, तज्जातिस्त्रियां स्त्री० ङीप् ।

**रात्रिपुष्प** न० रात्रौ प्रफ्फाति पुष्प-अच् ७त० । उत्पले ।

**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्त्वात् । चन्द्रे ।

**रात्रिवासस्** न० रात्रेर्वास इवाच्छादकम् । अन्धकारे । रात्रौ परिधेयं वासः शाक० । रात्रौ परिधेये वस्त्रे ।

**रात्रिविगम** पु०६त० । रजन्यवसाने तदुपलक्षिते प्रभातकाले च

**रात्रिहास** पु० रात्रेर्हास इव शुभ्रत्वात् । श्वेतोत्पले ।

**रात्रान्ध** त्रि० रात्रावन्धः दृष्टिक्षययुक्तः । निशादृष्टिशून्ये काकादौ । रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च ।

**राद्ध** त्रि० राध-कर्त्तरि कर्मणि वा क्त । सिद्धे, पक्वे च ।

**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब० । सिद्धान्ते संशय्य वादिदर्शितपक्षनिराकरणपूर्व्वकयथार्थपक्ष प्रतिपादके वाक्ये ।

**राध** सिद्धौ अक० निष्पादने, पाके च सक० स्वादि० दिवा० च पर० अनिट् । राध्नोति राध्यति अरात्सीत् अराद्ध ।

**राध** पु० राधा विशाखा तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण् । चान्द्रे वैशाखे मासि । तत्पूर्णिमायां स्त्री०ङीप् । [युच् । पूजने स्त्री० टाप् ।

**राधन** न० राध-ल्युट् । साधने, प्राप्तौ, तोषे च । राध-णिच्-

**राधा** स्त्री०राध-अच् । विशाखानक्षत्रे रिरंसया रमणीदेहत्वेना विर्भूते गोलोकस्थे परमेश्वरार्द्धाङ्गस्वरूपे शक्तिभेदे, तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुताया प्रधान गोपिकायाम्, कर्णस्य पालयित्र्यां मातरि च । [दयोष्यत्र ।

**राधाकान्त** पु० राधायाः कान्तः । श्रीकृष्णे राधावल्लभा-

**राधातनय** पु० राधायास्तनयः । कर्णे स हि कन्यावस्थायां सूर्यात् कुन्तीगर्भजातस्तया च त्यक्तः राधया सूतपत्न्या पालित इति भारतम् । [तत्वात् ढक् । कर्णे ।

**राधेय** पु० राधाया अपत्यम् पुत्रत्वेन परिग्रहणेन तत्पालि

**राम** पु० रम-कर्त्तरि घञ् ण वा । परशुरामे दशरथज्येष्ठपुत्रे श्रीरामे, बलरामे च । मनोहरे, शुभे च त्रि० वास्तूके, कुष्ठे (कुड़) तमालपत्रे न० । [स्वनामख्याते हयभेदे च ।

**रामकर्पूरक** पु० रामं मनोहरं कर्पूरमिव कन् । मौक्तिके,

**रामगिरि** पु० रामाश्रितः गिरिः । चित्रकूटपर्व्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः ।

**रामचन्द्र** पु० रामचन्द्र इवाह्लादकत्वात् । दशरथज्येष्ठपुत्रे श्रीरामे । [मदनवृक्षे (मयनागाछ)

**रामच्छर्द्दनक** पु० राममभिरामं छर्द्दयति छृद-णिच्-ण्वुल् ।

**रामजननी** स्त्री०६त० । वसुदेवपत्न्यां रोहिण्यां, जमदग्निपत्न्यां रेणुकायां, दशरथपत्न्यां कौशल्यायाञ्च ।

**रामठ** न० रमयति रम-णिच् ल्यु-पृ० वृद्धिः । गिरिनिम्बे, तिन्दुके च (तेंद) ।

**रामणीयक** न०रमणीयस्य भावः रमणीयमेव वा रमणीय+वुञ् । रमणीयत्वे 'मणिहारावलिरामणीयकमिति नैषधम् रमणीये च । [६त० । सीतायां, रेवत्याञ्च

**रामतरुणी** स्त्री० रामा अभिरामा तरुणीव । (सेओती)पुष्पे

**रामदूत** पु० रामस्य दूतः वार्त्ताहरः । हनूमति, स हि रामवार्त्तां लङ्कायां सीताया आजहार ।

**रामदूती** स्त्री० रामा अभिरामा दूतीव गन्धद्वारा प्रचारात् । तुलसीभेदे । (रामतुलसी)

**रामनवमी** स्त्री० रामस्य जन्माधारो नवमी । चैत्रशुक्लनवम्याम् । 'चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरि' रित्यगस्त्यसंहिता ।

**रामपूग** पु० रामः अभिरामः पूगः । गुवाकभेदे ।

**रामभद्र** पु० राम एव भद्रः मङ्गलदायकत्वात् । श्रीरामे 'रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति' पुराणम्

**रामलवण** न० कर्म० । शाम्भरिलवणे ।

**रामवल्लभ** न० रामस्य वल्लभं प्रियम् । भूर्ज्जपत्रे तद्धि रामेण वनवासाश्रमे प्रियतया धृतम् ।

**रामशर** पु० कर्म० । शरदृणभेदे-स हि काण्डद्वारा बाणहेतुत्वात् मनोहरः ।

**रामसख** पु० ६त० टच् । सुग्रीवे वानरराजे ।

**रामा** स्त्री०रम-णिच्कर्त्तरि घञ् । गीतादिकलाभिज्ञायां नार्य्यां । नारीमात्रे,नद्याम् हिङ्गुनि,हिङ्गुले, श्वेतकण्टकार्य्यां, स्थूहकयायां, अशोके, गोरोचनायां, वालायां, गैरिके च ।

**रामायण** न० । रामस्यायनं चरितमधिकृत्य कृतोग्रन्थोऽण् । रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे ।

**रामालिङ्गनकाम** पु० रामाणाम् स्त्रीणामालिङ्गनस्य कामोऽत्र । रक्तार्म्लाने । [दण्डभेदे ।

**राम्भ** पु० रम्भोवेणुस्तस्य विकारोऽण् । व्रतभेदे-धार्य्ये-वंशभवे

**राल** पु० रा-अलच् । सालवृक्षनिर्य्यासे (धुना) ।

**रालकार्य्य** पु० रालः कार्य्यो यस्य । सालवृक्षे ।

**राव** पु० रु-घञ् । शब्दे ।

**रावण** पु० रवणस्यापत्यम् शिवा० अण् रावयति शत्रून् णिच्-ल्यु वा, लङ्काधिपतौ राक्षसे ।

**रास** शब्दे भ्वा०आ०सक०सेट् । रासते अरासिष्ट चङि न ह्रस्वः

**रावणगङ्गा** स्त्री० रावणनिर्म्मिता गङ्गा नदी । सिंहलदेशस्थे नदीभेदे । [पुले ।

**रावणारि** पु०६त०। श्रीरामे रावणान्तकादयोऽप्यत्र । [ज्येष्ठ-

**रावणि** पु० रावणस्यापत्यम् अत इञ् । मेघनादाख्ये रावण

**राश** शब्दे भ्वा०आ०अक०सेट् । राशते अराशिष्ट चङि न ह्रस्वः

**राशि** पु० अश्नुते व्याप्नोति अश-इन् धातोरुडागमश्च । धान्यादीनां पुञ्जे, ज्योतिश्चक्रस्य द्वादशांशे मेषादौ, ऊह्यो राशिप्रसिद्धये' इति लीलावतीप्रसिद्धे व्यक्ताव्यक्तगणभेदे ।

**राशिचक्र** न० राशिघटितं चक्रं वृत्तम् । मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्व्वतः पश्चात् अनिशं बंभ्रम्यमाणे ज्योतिर्मये 'सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुग'मित्युक्ते ज्योतिश्चक्रे ।

**राशिभोग** पु० राशीनां स्वस्वगत्या ग्रहैर्भोगः भज-घञ् कुत्वम् । रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे ।

**राशी(शि)कृत** पुव अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि, तदर्थे समासो वा (ढेरी) पुञ्जीकृते एकत्रस्थीकृते ।

**राष्ट्र** न० राज-ष्ट्रन् । जनपदे 'गौडं राष्ट्रमनुत्तममिति, प्रबोधचन्द्रोदयः । उपद्रवे च । [कारिकायाम् ।

**राष्ट्रिका** स्त्री० राज-ष्ट्रन् षित्त्वात् ङीष् स्वार्थे कन् । कण्ट-

**राष्ट्रिय** पु० राष्ट्रे भवः घ । नाट्योक्तौ राजश्याले । छ तत्रार्थे । उभावपि राष्ट्रभवे त्रि० ।

**रास** पु० रस-घञ् रास-घञ् वा । शब्दे, ध्वनौ, धवले शृङ्खलावन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीड़ाभेदे, कोलाहले च ।

**रासभ** पु० रास-अभच् । गर्द्दभे ।

**रासभवन्दिनी** स्त्री० रासभस्य वन्दिनीव । मल्लिकायाम् ।

**रासमण्डल** न० रासार्थं शृङ्खलाबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीड़ाभेदेन मण्डलं मण्डलाकारेण भ्रमणं यत्र । रासक्रीडाधारस्थाने, श्रीकृष्णस्य तदुत्सवाङ्गे मण्डपभेदे च ।

**रासेश्वरी** स्त्री० ६त० । राधिकायाम् । [आमरुल)

**रास्ना** स्त्री० रस-नण् । स्वनामख्यातायां लतायाम् (काटा

**राहु** पु० रह-उण् । त्यागे, त्यक्तरि, ज्योतिश्चक्रस्थे सूर्य्यकिरणसंपर्काभावेन जायमानपृथिवीच्छायाधिष्ठातरि ग्रहभेदे, सिंहिकासुते दानवे च ।

**राहुच्छत्त्र** न० राहोर्ग्रहस्य छत्रमिव । आर्द्रके ।

**राहुदर्शन** न० राहोर्दर्शनं यत्र । चन्द्रसूर्य्ययोरुपरागरूपे ग्रहणे 'स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने' इति स्मृतिः तेन उपरक्तेएव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा

**राहुमूर्द्धभिद्** पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद-क्विप् । विष्णौ अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्चिच्छेदेति पुरा०

**राहुरत्न** न० राहोः प्रियं रत्नम् । गोमेदमणौ ।

**राहुस्पर्श** पु० राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र । चन्द्रसूर्य्ययोः उपरागरूपे ग्रहणे ।

**राहूच्छिष्ट** पु० ६त० । लशुने ।

**राहूत्सृष्ट** पु० ६त० । लशुने ।

**रि** गतौ तु०पर०सक०अनिट् । रियति अरैषीत् । [त्रि०

**रिक्त** त्रि०न०रिच-क्त । शून्ये, वने, निरर्थके च । स्वार्थे कन् । तत्रैव

**रिक्ता** स्त्री० रिच-क्त । उभयपक्षयोश्चतुर्थीनवमीचतुर्द्दशीतिथिषु

**रिक्तभाण्ड** न० रिक्तं भाण्डम् । तैलादिशून्ये भाण्डे ।

**रिक्तहस्त** त्रि० रिक्तो धनादिशून्योहस्तो यस्य । निर्द्धने, भूरिदानादिना व्ययितधने च ।

**रिक्थ** न० रिच-थक् । धने । मिताक्षराद्युक्ते अप्रतिबन्धे दाये च 'स्वामी रिक्थक्रयसंविभागेत्यादि स्मृतिः ।

**रिक्थहारिन्** त्रि० रिक्थं दायं हरति गृह्णाति । दायग्राहिणि पुत्रादौ । अण् । रिक्थग्राहोऽप्यत्र ।

**रिक्थिन्** त्रि० रिक्थं ग्राह्यत्वेनास्त्यस्य इनि । दायहारिणि दायादे 'उभयोरप्यसौ रिक्थी'ति स्मृतिः ।

**रिख** सर्पणे भ्वा०पर०अक०सेट् इदित् । रिङ्खति अरिङ्खीत् । अनिदिदप्ययमित्येके रेखति अरेखीत् ।

**रिग** गतौ भ्वा०पर०सक०सेट् इदित् । रिङ्गति अरिङ्गीत्

**रिङ्गण** न० रिगि-ल्युट् । स्खलने । रिखि ल्युट् । रिङ्खणमप्यत्र

**रिच** सम्पर्के वियोगे च वा चु०उभ०पक्षे भ्वा०पर०सक०सेट् । रेचयति ते रेचति । अरीरिचत् त अरेचीत् ।

**रिच** विरेके (अतिशय पुरीषोत्सर्गे) रुधा०उभ०सक० अनिट् । रिणक्ति रिङ्क्ते अरिचत् अरैक्षीत् अरिक्त ।

**रिज** भर्जने भ्वा०आ०सक०सेट् । रेजते अरेजिष्ट ।

**रिपु** पु०रप-उ-पृ० । शत्रौ, चोरनामगन्धद्रव्ये, ज्योतिषोक्ते लग्नापेक्षया षष्ठस्थाने च । [भेदे शत्रुघातके त्रि० ।

**रिपुघातिनी** स्त्री० रिपुं हन्ति हन-णिनि । (कुचुरु) लता-

**रिपुञ्जय** त्रि० रिपुञ्जयति जि-खच् । शत्रुजयिनि, नृपभेदे पु०

**रिन्फ** वधे तु०प०सक०सेट् । रिम्फति अरिम्फीत् ।

**रिप्फ** पु० रिफ-अच् पृ०। लग्नापेक्षया द्वादशे स्थाने ।

**रिफ** कुत्सने सौ०पर०सक०सेट् । रेफति अरेफीत् ।

**रिफ** हिंसायां निन्दायां बोधने च सक० लाघायाम् अक०तु० पर०सेट् । रिफति अरेफीत् ।

**रिव** गत्यां भ्वा०पर०सक०सेट् इदित् । रिण्वति अरिण्वीत् ।

रिभ रवे भ्वा॰पर॰सक॰सेट् । रेभति अरेभीत् ।

रिरंसा पु॰ रम-सन्-अ । रमणेच्छायाम् ।

रिख गतौ भ्वा॰पर॰सक॰ सेट् इदित् । रिङ्खति अरिङ्खीत् ।

रिश हिंसायां तु॰पर॰सक॰अनिट् । रिशति अरिक्षत् ।

रिश्य पु॰ रिश्यते रिश-क्यप् । मृगभेदे ।

रिष वधे भ्वा॰ पर॰सक॰सेट् । रेषति अरेषीत् ।

रिष्ट न॰ रिश-क्त । मङ्गले, अशुभे च । भावे क्त । नाशे, पापे च । अशुभादिमति त्रि॰ । खड्गे, रक्ताग्निस्यौ च पु॰। स्वार्थे कन् । तेषु । [रश्मौ पु॰

रिष्टि स्त्री॰ रिष-रिश-वा क्तिन् । अशुभे, शस्त्रभेदे च । क्तिच्

रिह वधे भ्वा॰पर॰सक॰सेट् । रेहति अरेहीत् । [रीणः ।

री क्षरणे दि॰आ॰अक॰अनिट् । रीयते अरेष्ट निष्ठातस्य न

री गतौ वधे च सक॰ रवे अक॰ क्र्या॰ प॰ अनिट् । रिणाति अरैषीत् ।

रीठा स्त्री॰ री-ठक् ठस्य नेत्त्वम् । रीठाकरञ्जे ।

रीठाकरञ्ज पु॰ कर्म॰ । स्वनामख्याते वृक्षे ।

रीढा स्त्री॰ रिह-क्त ढत्वभावः । अवज्ञायाम् ।

रीण त्रि॰ री-क्त । क्षरिते स्रुते ।

रीति स्त्री॰ री-क्तिन् । पित्तले, प्रभावे, क्षरणे, लौहकिट्टे, सीमायां, गतौ, स्वभावे, अलङ्कारोक्ते गौडादिरचनाभेदे च ।

रीतिक न॰ रीतिरिव कायति कै-क । पुष्पाञ्जने स्त्रीत्वमपि स्वार्थे कन् । पित्तले न॰।

रीतिपुष्प न॰ रीतेः पुष्पमिव । कुसुमाञ्जने ।

रीव ग्रहणे, संवरणे च भ्वा॰ उ॰सक॰सेट् । रीवति ते अरीवीत् अरीविष्ट । चङि न ह्रस्वः ।

रु ध्वनौ अदा॰प॰अक॰वेट् । रौति-रवीति अरावीत्-अरौषीत्

रु वधे गतौ च भ्वा॰ आ॰सक॰ अनिट् । रवते अरोष्ट ।

रुक्प्रतिक्रिया स्त्री॰ रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ-भावे श । चिकित्सायाम् ।

रुक्म न॰ रुच्-मन् नि॰ कुत्वम् । काञ्चने, धस्तूरे, लौहे, नागकेशरे च । [स्वर्णकारे जातिभेदे ।

रुक्मकारक पु॰ रुक्मं तन्निर्मित भूषणं करोति कृ॰ण्वुल् ।

रुक्मिन् पु॰रुक्मं विद्यतेऽस्य इनि । राजभेदे । स्वर्णस्वामिनि त्रि॰ । रुक्मिराजकन्यायां श्रीकृष्णपत्न्यां स्त्री॰ ङीप् ।

रु(रू)क्ष त्रि॰ रुह-क्स पृ॰ वा दीर्घः । अचिक्कणे, निस्नेहे, कठोरे च । [अरोचिष्ट ।

रुग्ण त्रि॰रुज-क्त । रोगान्विते, भुग्ने च । [अरुचत्

रुच प्रीतौ प्रकाशे च भ्वा॰आ॰अक॰सेट् । रोचते लुङि उ॰

रुचक न॰ रुच-कुन् । सर्जिकाक्षारे, माङ्गल्ये द्रव्ये, उत्कटे, अश्वभूषणे, माल्ये, सौवर्च्चले आस्वाद्यरसे, रोचनायाम्, विडङ्गे, लवणे च । वीजपूरे, दन्ते, निष्के, कपोते च पु॰। [च ।

रुच्(चा) स्त्री॰ रुच-सम्प॰क्विप् वा टाप् । दीप्तौ, शोभायां, प्रकाशे

रुचि(ची) स्त्री॰ रुच-कि वा ङीप् । अनुरागे, आसङ्गे, स्पृहायाम्, अभिलाषे, किरणे, शोभायां, बुभुक्षायां, गोरोचनायां च । प्रजापतिभेदे पु॰ ।

रुचिर त्रि॰रुचिं राति ददाति रा-क । मनोहरे, सुन्दरे, मधुरे च । मूलके, कुङ्कुमे, लवङ्गे च न॰। गोरोचनायाम् स्त्री॰ ।

रुचिराञ्जन पु॰ अज्यतेऽनेन अन्ज-करणे ल्युट् रुचिरशोभायुक्तोऽञ्जनः । शोभाञ्जने ।

रुच्य त्रि॰ रुचये हितः यत् । सुन्दरे, रुचिकरे च । सौवर्च्चले न॰ । पत्यौ, कतकवृक्षे, शालिधान्ये च पु॰ ।

रुच्यकन्द पु॰रुच्यः रुचिकरः कन्दो मूलमस्य । शूरणे (ओल)

रुज भञ्जने तु॰प॰सक॰अनिट् । रुजति अरौक्षीत् निष्ठातस्य नः । रुग्णः ।

रुज हिंसायां चु॰ उभ॰सक॰सेट् । रोजयति ते अरूरुजत्

रुज्(जा) स्त्री॰ रुज-सम्प॰ क्विप् वा टाप् रुज-अङ् वा । रोगे, भङ्गे, मेष्यां, कुष्ठे च (कुड़) ।

रुजाकर न॰ रुजां रोगं करोति कृ-अच् । कर्मरङ्गफले (काम राङ्गा) रोगकारके त्रि॰ ।

रुट चौर्य्ये भ्वा॰पर॰सक॰सेट् इदित् । रुण्टति अरुण्टीत् ।

रुट रोषे सक॰दीप्तौ अक॰चु॰उ॰सेट् । रोटयति ते अरूरुटत् त

रुट दीप्तौ प्रतिघाते च भ्वा॰ आ॰अक॰ सेट् । रोटते लुङि उभ॰ अरुटत् अरोटिष्ट । [ठिष्ट

रुठ उपघाते भ्वा॰पर॰सक॰सेट् । रोठति अरोठीत् । [अरो

रुठ प्रतीघाते भ्वा॰आ॰सक॰सेट् । रोठते लुङि उ॰ अरुठत्

रुठ गतौ चौर्य्ये सक॰ मन्दीभावे खञ्जीभावे च अक॰भ्वा॰ पर॰ सेट् इदित् । रुण्ठति अरुण्ठीत् ।

रुण्ड पु॰ रुटि-अच् पृ॰ ठस्य डः । मूर्द्धशून्ये देहे कबन्धे ।

रुत न॰ रु-क्त । रवे पशुपक्षिप्रभृतीनां शब्दे । [अरोदीत् ।

रुद् रोदने अदा॰ पर॰ रुदा॰ अक॰सेट् । रोदिति अरुदत्

रुदित न॰ रुद्-भावे क्त । क्रन्दने । कर्त्तरि क्त । कृतरोदने त्रि॰

रुद्ध त्रि॰ रुध-क्त । आवरणादिना वेष्टिते कृतगतिरोधे च ।

रुद्र पु॰ रोदिति रुद्-रक् । शिवमूर्त्तिभेदे 'सोऽरोदीत यदरोदीत् तत् रुद्रस्य रुद्रत्वमि'ति श्रुतिः । अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः । जयन्तोबहुरूपश्च त्र्यम्बकोप्यपराजितः । वैवस्वतश्च सावित्रो हरोरुद्रा इति'स्मृता इत्युक्तेषु

एकादशसु शिवमूर्त्तिभेदेषु ।

रुद्रज पु० रुद्रात् जायते जन-ड । शिवशीर्य्यजाते पारदे ।

रुद्रजटा स्त्री० रुद्रस्य जटेव पिङ्गत्वात् जटिलत्वात् । स्वनाम ख्याते लताभेदे ।

रुद्रपत्नी स्त्री० ६त० । दुर्गायाम् अतस्याञ्च (मसिना)

रुद्रप्रिया स्त्री० ६त० हरितक्याम् दुर्गायाञ्च ।

रुद्रविंशति स्त्री० रुद्रस्वामिका विंशतिः । प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु ।

रुद्रसावर्णि पु० चतुर्द्दशसु मनुषु मध्ये, द्वादशे मनौ ।

रुद्राक्रीड़ न० रुद्रस्याक्रीड़ा यत्र । श्मशाने ।

रुद्राक्ष पु० रुद्रस्याक्षीव यत्र । स्वनामख्याते वृक्षे ।

रुद्राणी स्त्री० रुद्रस्य पत्नी रुद्र+ङीप् आनुक् च । शिवपत्न्याम्

रुद्रारि पु० रुद्रः अरिर्यस्य । कामदेवे ।

रुद्रावास पु० ६त० । कैलासे, काश्याम्. श्मशाने च ।

रुध कामे दि० आ० सक० अनिट् प्रायेणानुपूर्व्वः । अनुरुध्यते अन्वरुद्ध । [अरौत्सीत्

रुध आवरणे, रु० उभ० सक० अनिट् । रुणद्धि रुन्धे अरुधत्

रुधिर न० रुध-किरच् । शरीरस्थे रसपाकजन्ये धातुभेदे । मङ्गलग्रहे' रक्तवर्णे च पु० तद्वर्णवति त्रि० ।

रुप आकुलीकरणे दि० पर० सक० सेट् । रुप्यति-अरुपत् । अरोपीत् । [भेदे च

रुमा स्त्री० रु-मक् । सुग्रीववानरभार्य्यायाम् लवणस्थाने देश-

रुरु पु० रु-क्रु । मृगभेदे । [रु-वुक् । रुवूकोऽप्यत्र

रुवु पु० रु-कु । एरण्डवृक्षे । कन् । तत्र, रक्तैरण्डे च पु० ।

रुश हिंसायां तु० पर० सक० अनिट् । रुशति अरुक्षत् ।

रुष वधे भ्वा० पर० सक० सेट् । रोषति अरोषीत् ।

रुष क्रोधे दि० पर० अक० सेट् । रुष्यति अरुषत् अरोषीत् ।

रुष क्रोधे चु० उभ० अक० सेट् । रोषयति ते अरूरुषत् त ।

रुष्(षा) स्त्री० रुष-संप० क्विप् वा टाप् । क्रोधे ।

रुषित त्रि० रुष-क्त वा इट् । क्रोधयुक्ते इडभावपक्षे रुष्टोऽप्यत्र

रुह उद्भवे भ्वा० पर० अक० अनिट् । रोहति अरुहत् । ज्वला० ।

रुह त्रि० रुह-क । जाते । दूर्व्वायां स्त्री० उत्तरपदस्थः तत्माद्भूते त्रि० यथा भूरुहः वारिरुहम् ।

रूक्ष पारुष्ये कठोरतायाम् निःस्नेहे च । चु० आ० अक० सेट् । रूक्षयति ते अरुरूक्षत् त । [दन्तीवृक्षे स्त्री० ।

रूक्ष त्रि० रूक्ष-अच् । अचिक्कणे, स्नेहशून्ये च । वृक्षे पु० ।

रूक्षगन्ध पु० रूक्षो गन्धो यस्य । गुग्गुलौ ।

रूक्षदर्भ पु० कर्म० । हरिदर्भे कुशभेदे ।

रूक्षपत्त्र पु० रूक्षं पत्त्रमस्य ( शाखोटवृक्षे ।

रूक्षप्रिय पु० रूक्षं प्रियं यस्य । ऋषभौषधे ।

रूढ त्रि० रुह-क्त । जाते, प्रसिद्धे च 'रूढिरस्यास्ति अच् । प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके शब्दे यथा । घटः गौरित्यादि । [पेक्ष्य शब्देन समुदायशक्त्यार्थस्यबोधने च

रूढि स्त्री० रुह-क्तिन् । जन्मनि, प्रसिद्धौ, प्रकृतिप्रत्ययार्थमन-

रूप रूपान्वितकरणे अक० चुरा० उभ० सक० सेट् । रूपयति ते अरुरूपत् त ।

रूप न० रूप-क भावे अच् वा । स्वभावे, सौन्दर्य्ये, पशौ, नाम्नि, शब्दे, ग्रन्थावृत्तौ, दृश्यकाव्ये नाटकादौ, श्लोके, शब्दधातूनां विभक्तियोगेन निष्पन्नशब्दे, शुक्लादिवर्णे च तद्वति त्रि० । उत्तरपदस्थः सदृशार्थे त्रि० यथा पितृरूपस्तनयः मातृरूपा कन्या । एकसंख्यान्विते न० 'रूपं भजेत् स्यात् परिपूर्त्तिकाल' इति लीलावती । 'एकाव्यक्तं शोधयेदन्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति वीजगणितोक्ते अव्यक्तराशिसहचरितव्यक्तसंख्यान्विते च ।

रूपक न० रूपयत्यत्र रूप-अच् कन् । अभिनयप्रदर्शके दृश्यकाव्यप्रभेदे, रूपमस्त्यस्य वुण् । मूर्त्ते त्रि० रूप+स्वार्थे कन् । शुक्लादिवर्णे, आकारे च रूपकं रूपितारोपादित्यलङ्कारोक्ते अर्थालङ्कारभेदे, गुञ्जात्रयपरिमाणे, रजते च ।

रूपधारिन् त्रि० रूपं धारयति धारि-णिनि । रूपवति, सौन्दर्य्यान्विते, वेशान्तरग्राहिणि नटे च ।

रूपवत् त्रि० रूप+मतुप् मस्य वः । शुभ्रादिरूपविशिष्टे, सौन्दर्य्ययुक्ते, आकारविशिष्टे च । [वेश्यायाम् ।

रूपाजीवा स्त्री० रूपं सौन्दर्य्यमाजीवति आ+जीव-अच् ।

रूपिका स्त्री० रूपमस्त्यस्य ठन् । श्वेतार्कवृक्षे ।

रूप्य न० रूपाय आहन्यते स्वर्णादि यत् । अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च स्वार्थे यत् । रजतमात्रे । सुन्दरे त्रि० । [रूषत् त ।

रूप्याध्यक्ष पु० रूप्येषु अध्यक्षः । कोषाध्यक्षे । [ते अरु-

रूष धूल्यादिनामिश्रीकरणे अद० चु० उभ० अक० सेट् । रूषयति

रूषक पु० रूष-ण्वुल् । वासके वृक्षे ।

रूषित त्रि० रूष-क्त । धूल्यादिभिर्मिश्रिते, अचिक्कणीकृते च

रे अव्य० रा-के डिच्च । नीचादेः सम्बोधने । [ह्रस्वः

रेक शङ्कायां भ्वा० आ० स० सेट् । रेचते अरेचिष्ट । चङि न

रेक पु० रिच-घञ् । विरेचने । रेक-अच् । शङ्कायां, नीचे, भेके च । रेक-अ । सन्देहे स्त्री० टाप् ।

रेखा स्त्री० लिख-अच् लस्य रः । अल्पे, छले, आभोगे,

विन्दुपुञ्जकृते दण्डाकारेण चिह्नभेदे, पङ्क्तौ च ।
रेचक न॰ रेचयति रिच-णिच्-ण्वुल् । कङ्कुष्ठे, यवक्षारे, जयपाले, तिलकवृक्षे च । पुरीषनिःसारणकारके त्रि॰ ।
रेचन न॰ रिच्-ल्युट् । मलभेदनेन तन्निःसारणे ।
रेचनक पु॰ रिच्यतेऽनेन ल्युट् संज्ञायां कन् । कम्पिल्लवृक्षे । कनभावे वा ङीप् । रेचनी रेचनाप्यत्र स्त्री॰ ।
रेची स्त्री॰ रेचयति अच् गौ॰ ङीष् । कम्पिल्लवृक्षे, अङ्कोठे च ।
रेज दीप्तौ भ्वा॰ आत्म॰ अक॰ सेट् । रेजते अरेजिष्ट । चङि न ह्रस्वः ।
रेट याचने वाचि च द्वि॰ भ्वा॰ उभ॰सेट् । रेटति ते अरेटीत् [अरेटिष्ट । चङि न ह्रस्वः
रेणु पु॰स्त्री॰ रि-णु । परागे, धूलौ, पांशौ च । पर्पटे पु॰ ।
रेणुका स्त्री॰ रेणुना कायति कै-क । मरिचाकृतौ सुगन्धिद्रव्ये, जमदग्निपत्न्यां परशुराममातरि च ।
रेणुकासुत पु॰६त॰ । परशुरामे रेणुकात्मजादयोऽप्यत्र ।
रेणुरूषित पु॰ रेणुभिः रूषितः । गर्द्दभे । धूलिधूसरे त्रि॰
रेणुसार पु॰ रेणुरिव सारोऽस्य । कर्पूरे । स्वार्थे कन् । तत्रैव
रेतस् न॰ री-असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जहेतुके चरमधातौ शुक्रे, शिववीर्य्ये पारदे च ।
रेप शब्दे अक॰ गतौ सक॰भ्वा॰आत्म॰सेट् । रेपते अरेपिष्ट चङि न ह्रस्वः ।
रेप त्रि॰ रेप-अच् । निन्दिते, क्रूरे, कृपणे च ।
रेफ पु॰ र+इफ । रकारात्मके वर्णे । रिफ-अच् । कुत्सिते त्रि॰ असुन् रेफस् । क्रूरे, अधमे, दुष्टे कृपणे च त्रि॰ ।
रेब(व) गतौ सक॰ प्लुतौ अक॰भ्वा॰आ॰सेट् । रेब(व)ते अरेबि(वि)ष्ट । चङि न ह्रस्वः ।
रेभ शब्दे भ्वा॰आत्म॰अक॰सेट् । रेभते अरेभिष्ट । चङि न ह्रस्वः
रेवत पुः रेव-अतच् । जम्बीरे आरग्वधे बलरामश्वशुरे राजभेदे
रेवती स्त्री॰ रेवतस्यापत्यमण् पृ॰ । रेवतराजकन्यायां बलदेवपत्न्याम् । रेव-अतच् गौ॰ङीष् । अश्विन्यवधितः सप्तविंशतिसंख्याते नक्षत्रे, तत्संख्यायां, मातृकाभेदे स्त्रीगव्याम्, नदीभेदे, दुर्गायाञ्च । [६त॰ । रेवतीशादयोऽप्यत्र
रेवतीरमण पु॰ रेवतीं रमयति रम-णिच्-ल्यु । बलरामे ।
रेवन्त पु॰ रेव-झच् । गुह्यकाधिपतौ सूर्य्यपुत्रभेदे ।
रेवा स्त्री॰ रेव-अच् । नर्म्मदाख्यनद्याम् ।
रेष ह्रेषायां (घोटकशब्दे) भ्वा॰आत्म॰अक॰सेट् । रेषते अरेषिष्ट । चङि न ह्रस्वः ।
रै शब्दे भ्वा॰पर॰अक॰अनिट् । रायति अरासीत् ।
रै पु॰ रा-डै । धने, स्वर्णे च ।

रैत्य त्रि॰ रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये पात्रादौ ।
रैवत पु॰ रेवत्या नद्या अदूरो देशः अञ् । द्वारिकासमीपस्थे पर्व्वतभेदे स्वर्णालुवृक्षे, शिवे, दैत्यभेदे च । रेवत्यां भवः अण् । चतुर्द्दशसु मनुषु मनुभेदे ।
रैवतक पु॰ रैवतएव कन् । रैवतपर्व्वते ।
रोक न॰रु-कन् तस्य नेत्त्वम् । छिद्रे, 'तस्मै रोकं च शोकञ्चेति' स्मृतिः नौकायाम् च । रुच-घञ् नि॰ कुत्वम् । क्रयभेदे, दीप्तौ च पु॰ । [(कुष्ठ)
रोग पु॰ रुज-घञ् । धातुवैषम्यजाते व्याधौ, कुष्ठौषधे च
रोगघ्न न॰ रोगं हन्ति हन-क । औषधे, वैद्यकशास्त्रे च रोगनाशके त्रि॰ ।
रोगराज पु॰६त॰ टच् समा॰ । राजयक्ष्मव्याधौ ।
रोगलक्षण न॰ रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-ल्युट् । रोगानुमापके धातुवैषम्यहेतुके चिह्नभेदे ।
रोगशिला स्त्री॰ रोगाय तद्विवृत्तये शिला । मनःशिलायाम्
रोगह न॰ रोगं हन्ति हन-ड । औषधे, हन-क्विप् रोगहन् । रोगहन्तरि-वैद्यादौ त्रि॰ ।
रोगहर त्रि॰ रोगं हरति हृ-अच् । व्याधिनाशके द्रव्यादौ ।
रोगहारिन् पु॰ रोगं हरति हृ-णिनि । चिकित्सके वैद्ये ।
रोगितरु पु॰ रोगिप्रियस्तरुः शाक॰ । अशोकवृक्षे ।
रोगिन् त्रि॰ रोग+अस्त्यर्थे इनि । व्याधियुक्ते स्त्रियां ङीप् ।
रोचन पु॰ रुच-ल्यु रोचयति वा ल्यु । कूटशाल्मलिवृक्षे श्वेतशोभाञ्जने, पलाण्डौ, करञ्जे, अङ्कोटे, आरग्वधे दाड़िमे च । उत्तमायां नार्य्यां, रक्तकह्लारे गोपित्ते, गोरोचनायाञ्च स्त्री॰ टाप् । रुचिकारके त्रि॰ ।
रोचनक पु॰ रोचनाय रुचिजननाय कायति कै-क । जम्बीरे
रोचनफल पु॰ रोचनं रुचिकरं फलमस्य । बीजपूरके जम्बीरभेदे, चिर्भट्यां स्त्री॰ ।
रोचना स्त्री॰ रोचयतीति कर्त्तरि संज्ञायां ल्युट् अजा॰ टाप् मनःशिलायाम्, गोरोचनायां, आमलक्याम् श्वेतत्रिवृति, गन्धद्रव्यभेदे (गुडारोचना) च । [त्रि॰
रोचमान पु॰रुच-शानच् । अश्वग्रीवास्थरोमावर्त्ते । रुचियुक्ते
रोचिष्णु त्रि॰ रुच-इष्णुच् । दीप्तिशीले ।
रोचिस् न॰ रुच-इसुन् । प्रभायाम् ।
रोची स्त्री॰ रोचयति रुच्-णिच्-अच् गौ॰ङीष् । हिलमोचिकायाम् । [(रुटी)
रोटिका स्त्री॰ रुट-ण्वुल् । गोधूमादिचूर्णनिर्म्मिते पिष्टकभेदे

रोड अनादरे भ्वा०पर०सक०सेट् । रोडति अरोडीत् चडिन रुरुडः । [संज्ञायां कन् । यवाग्वायाम् ।
रोदन न०रुद-ल्युट । क्रन्दने,करणे ल्युट् ङीप् । दुरालभायां
रोदस् न० रुद-असुन् । स्वर्गे, भूमौ च गौरा०ङीप् रोदसी-त्यप्यत्र द्यावाभूम्योः स्त्री०द्वि०व० ।
रोध पु० रुध-घञ् । रोधने, आवरणे च। [प्रतिबन्धे न०
रोधन त्रि० रुणद्धि रुध-ल्यु । रोधकर्त्तरि, भावे ल्युट् ।
रोधस् न० रुध-असुन् । नद्यादिकूले ।
रोध्र न० रुध-रन् । पापे, अपराधे लोध्रवृक्षे च ।
रोध्रपुष्प पु० रोध्रस्य लोध्रस्येव पुष्पमस्य । मधूकवृक्षे (मौल)
रोध्रपुष्पिणी स्त्री० रोध्रइव पुष्पाति पुष्पविकाशे णिनि । धातकीवृक्षे (धाइफुल)
रोप पु०रुह-णिच्-हस्य पः कर्म्मणि अच् । वाणे । भावे अच्। रोपणे, धान्यादेर्जननाय अङ्कुरादेरारोपणे च। छिद्रे न०।
रोपण न० रुह-णिच्-हस्य पः ल्युट् । जनने, अञ्जनभेदे, रुप-ल्युट् । विमोहने, अन्यथाभूतस्य वस्तुनोऽन्यथा ज्ञापने । [रारोपणे
रोपित त्रि० रुह-णिच्-हस्य पः क्त । वृक्षादेर्जननाय कृताङ्कु-
रोमक न० रोमेव निविडं कायति कै-क । (रुम) नगरे, पांशुलवणे च ।
रोमकन्द पु० रोम्णा युक्तः कन्दो मूलमस्य । पिण्डालौ ।
रोमकपत्तन न०कर्म्म०। (रुम) नगरभेदे ।
रोमकूप पु० रोम्णां कूपइव । रोमाधारे विवरे 'न रोम-कूपौघमिषादिति नैषधम् ।
रोमकेशर न० रोमभिः केशरः सिंहसटेव । चामरे ।
रोमगुच्छ न० रोमभिर्गुच्छं स्तवकमिव । रोमसमुदायात्मके चामरे । कन् । स्वार्थे । [(रोंया)
रोमन् न०रु-मनिन् । देहजाते अङ्कुराकारे केशतुल्ये पदार्थे
रोमन्थ पु० रोमं मथ्नाति मन्थ-अण् पृ० नलोपः । भुक्तस्य घासादेः पशुभिरुद्गीर्य्य चर्व्वणे 'रोमन्थमभ्यस्यतीति' ।
रोमभूमि स्त्री०६त० । चर्म्मणि ।
रोमलता स्त्री० रोमाणि लतेव । रोमराजौ ।
रोमविकार पु० ६त० । रोमोद्गमे ।
रोमश त्रि० रोमाणि सन्त्यस्य श । प्रचुररोमयुक्ते । मेषे, पिण्डालौ,शूकरे, कुम्भाख्ये पु०(पाना)
रोमहर्ष पु० रोम्णः हर्षइव तद्व्यञ्जकत्वात् । रोमाञ्चे, हर्षौ त्सुक्यादिभिः रोमकूपे जायमाने कण्टकाकारे पदार्थे । ल्युट् । रोमहर्षणमप्यत्र न० ।
रोमहर्षण पु० रोमाणि हर्षयति हृष-णिच्-ल्यु । विभीतक वृक्षे, मुनिभेदे च ।
रोमाञ्च पु० रोम्णामञ्चः उद्गमः अन्च-अच् । रोमहर्षे ।
रोमाञ्चित त्रि०रोमाञ्चः जातोऽस्य तार० इतच्। जातपुलके
रोमाली स्त्री०६त० । रोमावलौ तदुद्भवसाधने तारुण्याव-स्थायाञ्च । [लुच् रोमवति त्रि०
रोमालु पु० रोमयुक्त आलुः शाक०। पिण्डालौ । रोम+आ-
रोमालुविटपिन् स्त्री०रोमालुः रोमयुक्तः विटपी। कुब्जीवृक्षे
रोमावलि(ली) स्त्री०६त० । रोमश्रेणौ नाभेरूर्द्ध्वस्थरोमपङ्क्तौ, तदुपलक्षिते तारुण्यावस्थायाञ्च । [ङ्कितादयोऽप्यत्र
रोमोद्गम पु०रोम्णामुद्गमः उद्-गम-घञ् । रोमहर्षे । रोमो-
रोरुदा स्त्री० रुद-यङ्-अ टाप् । अतिशयरोदने ।
रोल पु० रु-लच् । पानीयामलके ।
रोलम्ब पु०रौति रु विच् रौः सन् लम्बते गच्छति लम्ब-अच् कर्म्म०, रोड-अम्बच् डस्य लो वा । भ्रमरे ।
रोष पु० रुष-घञ् । क्रोधे । [युक्ते त्रि०
रोषण पु०रुष-युच् । पारदे,निकषप्रस्तरे,ऊषरभूमौ च क्रोध-
रोह पु० रुह-अच् । अङ्कुरे । रोहणकर्त्तरि त्रि० ।
रोहण पु० रुह्यतेऽत्रौ रुह-ल्युट् । पर्व्वतभेदे ।
रोहन्त पु० रुह-झच् । वृक्षभेदे, वृक्षमात्रे च । लताभेदे, लतायाञ्च स्त्री० गौ० ङीष् ।
रोहि पु० रुह-इन् । वीजे, वृक्षे च । धार्म्मिके त्रि० ।
रोहिण न० रुह इनन्। पञ्चदशधा विभक्तदिनस्य नवमे भागे 'कुर्य्यादारोहिणं बुध' इति स्मृतिः रोहिणी देवताऽस्य अण् । रौहिणमप्यत्र । वटवृक्षे, रोहितकवृक्षे च पु० ।
रोहिणी स्त्री० रुह-इनन् गौ ङीष् । स्त्रीगव्याम्, अश्विन्यव-धिके चतुर्थे नक्षत्रे,वसुदेवपत्न्यां-बलभद्रमातरि, विद्युति, कटुतुम्ब्यां लतायां, सोमवल्के च । रोहित+स्त्रियां ङीप् तस्य नत्वे सत्वम् । रक्तवर्णवत्यां स्त्रियाम्। सा च हरित-श्याम्, काश्मर्य्याम्, मञ्जिष्ठायाञ्च ।
रोहिणीपति पु०६त०। चन्द्रे वसुदेवे च रोहिणीलायादयोऽप्यत्र
रोहिणीव्रत न० रोहिणीयुक्ताष्टम्यां व्रतम् । रोहिण्युपल-क्षितायां भाद्रकृष्टाष्टम्यां कर्त्तव्ये उपवासरूपे व्रते ।
रोहित् पु०रुह-इति। सूर्य्ये,वर्णभेदे च। लताभेदे,मृग्याञ्च स्त्री
रोहित न० रुह-इतच् । रुधिरे, मरणे, इन्द्रचापे, स्वनाम ख्याते मत्स्यभेदे,रोहितकवृक्षे च । रक्तवर्णे पु०तद्वति त्रि० कन् । उक्तार्थे, मत्स्यभेदे स्वनामख्याते वृक्षे च ।
रोहिताश्व पु० रोहितवर्णाः अश्वा यस्य । वह्नौ ।

रोहितेय पु रोहितएव स्वार्थे ढ । रोहितकवृक्षे ।

रोहिन् पु० रोहति पुनश्छिन्नोऽपि प्रादुर्भवति रुह, णिनि । रोहितकवृक्षे । रोहणवति त्रि० । स्त्रियां ङीप् ।

रोहिष पु०रुह-इषन् । स्वनामख्याते वृक्षे ।

रौक्ष्य न० रूक्षस्य भावः ष्यञ् । पारुष्ये अचिक्कणतायाञ्च ।

रौचनिक त्रि० रोचनया रक्तः अण् । रोचनया रक्ते ।

रौट(ड) अनादरे भ्वा० पर०सक० सेट् । रौटति अरौटीत् । चङि न ह्रस्वः ।

रौद्र न०रुद्रो देवतास्य अण् । सूर्य्यतापे,उग्ररसे च । तद्वति, भीषणे च त्रि० । दुर्गायां रुद्रजटावृक्षे च स्त्री० ङीप् ।

रौप्य न० रूप्यमेव अण् । रजते । [तत्रैवार्थे

रौम न०रुमायां नद्यां भवः अण् । शाकम्भरिलवणे । स्वार्थे कन्

रौरव पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यं तस्येदं वा अण् । नरकभेदे तद्वर्णं वृहदभिधाने । चञ्चले,धूर्त्ते, घोरे च पु०

रौहिण पु० रुह-इनन् स्वार्थे अण् । चन्दनवृक्षे ।

रौहिणेय पु० रोहिण्यां भवः ढक् । बुधग्रहे, बलरामे च । मरकतमणौ न० । गोवत्से द्वि० ।

रौहिष न० रुह-इषन् स्वार्थेऽण् । मृगभेदे रोहितमत्स्ये च दूर्व्वायां, रोहिषघ्नयाञ्च स्त्री० ङीप् ।

## ल

ल पु० ला-क । इन्द्रे, तन्त्रोक्ते भूमिदेवताके मन्त्रभेदे न०

लक आस्वादे प्राप्तौ च चु०उ०स०सेट् । लाकयति ते अलीलकत् त

लकच पु० लक-अचन् । लिकुचवृक्षे (मादार) ।

लकुच पु० लक-उचन् । (मादार) वृक्षभेदे ।

लक्तक पु० लक-क्त नि० संज्ञायां कन् । अलक्तके (आलता)

लक्तकर्म्मन पु० लक्तं करोति कृ-मनिन् । रक्तवर्णलोध्रे ।

लक्ष दर्शने,अङ्कने च चु०उभ०स० सेट् । लक्षयति ते अललक्षत् त

लक्ष न० लक्ष-अच् । पदे, चिह्ने, व्याजे,शरव्ये च । दशायुतसंख्यायां स्त्री० न० । [बोधके शब्दे ।

लक्षक त्रि० लक्षयति लक्षणयार्थम् लक्ष-ण्वुल् । लक्षणयार्थ

लक्षण न० लक्ष्यतेऽनेन लक्ष-करणे ल्युट् । इतरभेदानुमापके चिह्ने,यथा पृथिव्या गन्धोलक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनुमापयति । 'स्वरूपं तटस्थ' द्विधा लक्षणं स्यात् स्वरूपे प्रविष्ट' स्वरूपादिभिन्न'मित्युक्ते स्वरूपलक्षणे तटस्थलक्षणे च यथा आकाशो नित्यम् सच्चिदानन्दो ब्रह्मेति । काकवत् गृहम्, जगज्जन्मादिकर्तृ ब्रह्मेति । स्वरूपे,यथा घटस्वरूपं वस्तु । नाम्नि,व्यवहारोपयोगिनि-चिह्ने च । कर्त्तरि ल्यु । स्वरूपप्रतिपादके 'नोदनालक्षणा-र्थोधर्म्म,इति जैमिनिसूत्रम् नोदना विधिवाक्यमेव लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थः धर्मः इति तदर्थः । शब्द-साधुताप्रतिपादके व्याकरणादिसूत्रे च न० 'लक्षणं त्वम-भिधानामि'ति । कर्म्मणि ल्युट् । प्रतिपाद्ये यथा 'इत्थं द्वादशलक्षणेति माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यविषयाणां समाहारः इति तदर्थः । लक्ष-युच् । शब्दनिष्ठवाच्यार्थसंबद्धार्थबोधकतारूपे 'मुख्यार्थबाधे तद्योगे यया न्योऽर्थः प्रतीयते । रूढेः प्रयोजनाद्वापि लक्षणा शक्ति-रर्पितेत्युक्ते, वृत्तिभेदे स्त्री० । यथा गङ्गायां घोषः प्रतिवस-तीत्यादौ गङ्गाशब्दस्य जलप्रवाहरूपे स्वार्थेऽन्वयासम्भवात् तत्सम्बद्धतीरादिबोधकता । सा च बहुधा विस्तरो वृहद-भिधाने । लक्ष्मणे,सारसपक्षिणि च पु० तत्स्त्रियां स्त्री०

लक्षित त्रि० लक्ष-कर्म्मणि क्त । लक्षणया बोधितेऽर्थे, ज्ञाते, अनुमिते च कर्त्तरि क्त । लक्षणाश्रये, लक्षकशब्दे च ।

लक्ष्मन् न० लक्ष-मनिन् । चिह्ने,प्रधाने च । स्वार्थे अण् पु० । सारसपक्षिणि दशरथपत्न्याः सुमित्रायाः ज्येष्ठात्मजे च पु० । श्वेतकण्टकार्य्यां, सारसपक्षिस्त्रियाम्, ओषधभेदे च स्त्री०

लक्ष्मी स्त्री० लक्ष-ई-मुट् च । शोभायां,कान्तौ,विष्णोः-पत्न्याम्, सम्पत्तौ, ऋद्ध्योषधे, वृद्धिनामौषधे, फलिनीवृक्षे, स्थलपद्मि-न्याम्, हरिद्रायां, शम्यां, शुक्तायां, द्रव्ये च ।

लक्ष्मीकान्त पु ६त० । विष्णौ, राजनि च लक्ष्मीपत्यादयो-प्यत्र । 'विहाय लक्ष्मीपतिलक्ष्म'ति भारविः ।

लक्ष्मीपुत्र पु०६त० । कामदेवे, गन्धर्व्वभेदे, अश्वे, कुशे च ।

लक्ष्मीवत् पु० लक्ष्मीः शोभास्त्यस्य मतुप् मस्य वः । पनसे श्रीयुक्ते त्रि० । स्त्रियां ङीप् । [चन्द्रे, उच्चैःश्रवसि च

लक्ष्मीसहज पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड ।

लक्ष्य न० लक्ष-यत् । वेधार्थसङ्ख्यमाने शरव्ये । लक्षणया बोध्येऽर्थे, उद्देश्ये, ज्ञेये, अनुमेये च त्रि० ।

लख गतौ भ्वा०पर०सक०सेट् । लखति । अलखीत्-अलाखीत् इदित्त्वयम् लङ्खति अलङ्खीत् ।

लग सङ्गीभावे अक० गतौ भ्वा०सक०प०सेट् । लङ्गति अलङ्गीत्

लग सङ्गे भ्वा० पर०सक०सेट् एदित् । लगति अलगीत् घटा० लगयति । 'छायेव तस्या लगति स्मे'ति नैषधम् ।

लग स्वादे प्राप्तौ च सक०चु०उभ०सेट् । लागयति ते अलीलगत् त

लगित त्रि० लग-क्त । संसक्ते ।

लगुड़(ल)(र) पु० लग-उलच् लस्य डरौ वा । दण्डाकारे काष्ठनिर्म्मिते पदार्थे (लाठी) ।

लग्न न॰ लस्ज-क्त तस्य नः । मेषादिराशीनामुदये लज्जिते त्रि॰ । लग-क्त इ॰ । संसक्ते त्रि॰ । स्तुतिपाठके पु॰ । लग्नइव इवार्थे कन् । प्रतिभुवि । (जामिन) 'खादको वित्तहीनः स्यात् लग्नकोऽवित्तवान् यदी'ति स्मृतिः ।

लग्निका स्त्री॰ नग्नेव कन् इ॰ । अदृष्टरजस्कायां स्त्रियाम् ।

लघ अभोजने सीमातिक्रमगतौ च भ्वा॰ आ॰ स॰ सेट् इदित् । लङ्घते अलङ्घिष्ट । 'कल्लोलिनीवल्लभसप्तलङ्घे', इति नाटकम्

लघ शोषणे भ्वा॰ पर॰ सक॰ सेट् इदित् । लङ्घति अलङ्घीत् ।

लघ प्रकाशे चु॰ उ॰ स॰ सेट् इदित् । लङ्घयति-ते अललङ्घत् त

लघ आस्वादने चु॰ उभ॰ सक॰ सेट् । लाघयति-ते अलीलघत्-त

लघिमन् पु॰ लघोर्भावः इमनिच् डिच्च । लघुत्वे लाघवे, येनोर्द्ध्वगतिसम्भवः । ईश्वरस्य ऐश्वर्य्यभेदे च ।

लघिष्ठ त्रि॰ अतिशयेन लघुः इष्ठन् डिद्वद्भावः । अतिशय-लघुत्वयुक्ते । ईयसुन् । लघीयानप्यत्र स्त्रियां ङीप् ।

लघु त्रि॰ लघि-कु नि॰ नलोपः । शीघ्रे कृष्णागुरुणि, वीरणमूले च । पृक्कानामौषधौ स्त्री॰ । निःसारे, लाघवगुणान्विते, ह्रस्वे, मनोहरे च त्रि॰ । व्याकरणोक्ते ह्रस्वसंज्ञके अकारादौ वर्णे, ज्योतिषोक्तेषु 'पुष्याश्विहस्ता लघु'रित्युक्ते पुष्यादिनक्षत्रेषु च पु॰ । लघुतावत्यां स्त्रियां स्त्री॰ वा ङीप् ।

लघुकाश्मर्य्य पु॰ कर्म॰ । कट्फले वृक्षे ।

लघुचिर्भटा स्त्री॰ कर्म॰ । स्वर्गेर्वारौ कर्कटीभेदे ।

लघुदन्ती स्त्री॰ कर्म॰ । क्षुद्रदन्तीवृक्षे ।

लघुद्राक्षा स्त्री॰ कर्म॰ । काकलीद्राक्षायाम् । [चन्दने ।

लघुनामन् पु॰ लघुवर्णयुक्तं नाम वाचकशब्दो यस्य । अगुरु

लघुपत्रक पु॰ लघूनि ह्रस्वानि पत्राण्यस्य कप् । (गुड़ारोचना) लताभेदे ।

लघुपुष्प पु॰ लघु पुष्पं यस्य । भूमिकदम्बे ।

लघुबदर पु॰ कर्म॰ । क्षुद्रकोलौ । भूबदर्य्याम् स्त्री॰ ङीप् ।

लघुब्राह्मी स्त्री॰ कर्म॰ । क्षुद्रब्राह्म्याम् । [क्षुद्राग्निमन्थे ।

लघुमन्थ पु॰ । अग्निमन्थः मन्थः पूर्वपदलोपः कर्म॰ ।

लघुलय न॰ लघु शीघ्रं लीयते ली-अच् । वीरणमूले ।

लघुसदाफला स्त्री॰ सदा फलं यस्याः कर्म॰ । क्षुद्रोडुम्बरिकायाम् (छोट डुमुर) ।

लघुहेमदुग्धा स्त्री॰ कर्म॰ । क्षुद्रोडुम्बरे (छोट डुमुर) ।

लघूडुम्बरिका स्त्री॰ कर्म॰ । (छोट डुमुर) उडुम्बरभेदे ।

लङ्का स्त्री॰ लक-अच् नुम् च । स्वनामख्यातायां पुर्य्याम् ।

लङ्काधिप पु॰ ६त॰ । रावणे लङ्कानाथादयोऽप्यत्र ।

लङ्काथि(पि)का स्त्री॰ लङ्कामयते आप्नोति वा ण्वुल् । पृक्कायां (पिडिङ्) शाकभेदे । [वृक्षभेदे । लङ्कावासिनि त्रि॰

लङ्कास्थायिन् पु॰ लङ्कायां तिष्ठति स्था-णिनि । (लङ्कासिज)

लङ्कोपिका स्त्री॰ लङ्कायामुप्यते वप-ण्वुल् इ॰ । पृक्कायाम् । (पिड़िङ्शाक) । [प्लवने च ।

लङ्घन न॰ लघि-ल्युट् । अभोजने, अतिक्रम्य गमने, क्रमणे,

लछ चिह्नकरणे भ्वा॰ पर॰ सक॰ सेट् । लच्छति अलच्छीत् ।

लज व्रीडायाम् भ्वा॰ आ॰ सक॰ सेट् । लजते अलजिष्ट ।

लज तिरस्कारे भ्वा॰ पर॰ सक॰ सेट् इदित् । लञ्जति अलञ्जीत् ।

लज अन्तर्द्धाने चुरा॰ उ॰ सक॰ सेट् । लाजयति-ते अलीलजत् त

लज भाषणे हिंसायां दाने च सक॰ सामर्थ्ये वासे च अक॰ चुरा॰ सेट् इदित् । लञ्जयति-ते अललञ्जत् त ।

लज भासने अद॰ चु॰ उभ॰ सक॰ सेट् । लजयति-ते अललजत् त

लजकारिका स्त्री॰ लजं लज्जां करोति कृ-ण्वुल् अत इत्वम् । लज्जालुलतायाम् ।

लज्जा स्त्री॰ लस्ज-अ । अकार्य्यप्रवृत्तौ परदर्शने दुष्टत्वधिया ततो निवृत्तिसाधने चित्तवृत्तिभेदे ।

लज्जालु स्त्री॰ लस्ज-आलुच् । लताभेदे । लज्जावति त्रि॰ ।

लज्जाशील त्रि॰ लज्जां शीलयति शील-अण् । लज्जाविशिष्टे ।

लज्जित पु॰ लज्जा जाताऽस्य तार॰ इतच् । जातलज्जे व्रीडिते

लज्जिरी स्त्री॰ लज्जा अस्त्यर्थे इरच् गौ॰ ङीष् । लज्जालुलताभेदे ।

लञ्ज भासने अद॰ चु॰ उभ॰ अक॰ सेट् । लञ्जयति ते अललञ्जत् त

लट बालभावे अक॰ उक्तौ द्वि॰ भ्वा॰ पर॰ सेट् । लटति । अलाटीत्-अलटीत् ।

लटपर्ण न॰ लटं दुष्टं पर्णमस्य । त्वचे (दारचिनि) ।

लट्वा स्त्री॰ लट-व । (भाटाकरञ्जा) करञ्जभेदे, वाद्यभेदे, ग्रामचटके, कुसुम्भे, भ्रमरके च ।

लड विलासे भ्वा॰ पर॰ अक॰ सेट् । लडति । अलाडीत्-अलडीत्

लड उत्पीड़ने जिह्वाचालने च भ्वा॰ पर॰ सक॰ सेट् । लडति अलाडीत्-अलडीत् घटा॰ । लडयति ।

लड उपक्षेपे चु॰ उभ॰ सक॰ सेट् । लाडयति-ते अलीलडत् त ।

लड व्याप्तौ चु॰ उभ॰ सक॰ सेट् । लाडयति-ते अलीलडत् ।

लड भाषणे द्वि॰ वा चु॰ पक्षे भ्वा॰ पर॰ सेट् इदित् । लण्डयति ते लण्डति । अललण्डत् त अलण्डीत् ।

लड उत्क्षेपणे वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् इदित् । लण्डयति-ते लण्डति । अललण्डत्-त अलण्डीत् ।

लड क्षेपणे अद॰ चु॰ उभ॰ सक॰ सेट् । लडयतिते अललडत् त ।

लड्डुक पु॰ लड-डु तस्य नेत्त्वम् स्वार्थे कन् । गोधूमादिचूर्ण

